पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्व-

कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यता दुःखेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यता दुःखेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यता दुःखेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यता दुःखेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता अनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

रपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता अनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताऽनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यताऽनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यताऽनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यताऽनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्मशून्यताऽनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता शान्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यता शान्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यता शान्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता शान्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यता शान्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता शान्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशल-मूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यताशून्येति धर्म्मं दशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्व कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यताशून्येति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यताशून्येति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यताशून्येति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता आनिमित्तेति धर्मं देशयति तच्चाऽनुपलम्भयो-गेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्रसर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यता आनिमित्तेति धर्मं देशयति तच्चाऽनुपलम्भ-योगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यता आनिमित्तेति धर्मं देशयति तच्चाऽनुप-

लम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्ध-भूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता चानिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यता चानिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता चानिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यता चानिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता चानिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयो-गेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयो-

गेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता अप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यताऽप्रणिहितेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताऽप्रणिहितेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यताऽप्रणिहितेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यताऽप्रणिहितेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यताऽप्रणिहितेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यताऽप्रणिहितेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऽसंस्कृतशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भ-

योगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यताऽनभिसंस्कारेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यताऽनभिसंस्कारेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यताऽनभिसंस्कारेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताऽनभिसंस्कारेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यताऽनभिसंस्कारेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यताऽनभिसंस्कारेति धर्मं देशयति तच्चाऽनुपलम्भयो-

णेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यताविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यताविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यनात्मानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानानि शान्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानानि शून्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यानिमित्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यप्रणिहितानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यनभिसंस्काराणीति धर्मं देशयति तच्चाऽनुपलम्भ-

योगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानानि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणान्यनात्मानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणानि शून्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणान्यानिमित्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणान्यप्रणिहितानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणान्यनभिसंस्काराणीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणानि विविक्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणभावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादाननित्या इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादान् दुःखा इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादाननात्मान इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादान् शान्ता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादान् शून्या इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादानानिमित्ता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादानप्रणिहिता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादाननभिसंस्कारा इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादान् विविक्ता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि दुःखानीति धर्म्मं देशयति तञ्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यनात्मानीति धर्म्मं देशयति तञ्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि शान्तानीति धर्म्मं देशयति तञ्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि शून्यानीति धर्म्मं देशयति तञ्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यानिमित्तानीति धर्म्मं देशयति तञ्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभुमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सत्त्वानि अनात्म्यनात्मकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सत्त्वानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सत्त्वानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सत्त्वान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सत्त्वान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनात्मकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि विविक्तानीति धर्म्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गभावनतायै धर्म्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनित्यमिति धर्म्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं दुःखमिति धर्म्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनात्मेति धर्म्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं शान्तमिति धर्म्मं देशयति तथानुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं शून्यमिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमानिमित्तमिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमप्रणिहितमिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनभिसंस्कारमिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं विविक्तमिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनात्मिकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्याभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यनित्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि दुःखानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यनात्मकानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि शान्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि शून्यानीति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यानिमित्तानीति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व-

